# आचार्यप्रशस्तिमकरन्दः



19—4—1980 शंकरजयन्तीमहोत्सवसमये

शिमिलिवेंकटरामशास्त्रिरक्षाकोशेन

प्रकाश्यते

## ॥ गुरुपरंपराप्रणामः ॥

---

आदौ शिवस्ततो विष्णुस्ततो ब्रह्मा ततः परम ।
वसिष्ठश्च ततः शक्तिः ततः षष्ठः पराशरः ॥

ततो व्यासः शुकः पश्चाद्गौडपादाभिधस्ततः ।
गोविन्दार्यगुरुस्तस्मात् शंकराचार्यसंज्ञकः ॥

पद्मपादः सुरेशश्च हस्तामलकतोटकौ ।
वेदान्तशिक्षागुरव आचार्याः पान्तु मां सदा ॥
( हुलस्च कोशसंग्रहतः )

पूर्णज्ञानाय निर्भेदपरमानन्दमूर्तये ।
व्यासशंकररूपाय श्रीपरब्रह्मणे नमः ॥
( भट्टत्र्यंबकशास्त्रिकृतभाष्यभानुप्रभातः )

हरिहरयोरवताराावाकलये व्यासशंकरौ हृदये ।
उदनायि कुमतिशंकापंकातंकात् जरद्गवी याभ्याम् ॥
( अर्धनारीश्वरदीक्षितकृतांबास्तवव्याख्यातः )

नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम ॥

श्रीशंकराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम ।
तं तोटकं वार्तिककारमन्यानस्मद् गुरून् सन्ततमानतोऽस्मि ॥

॥ ओं ॥

# ॥ आचार्यप्रशस्तिमकरन्दः ॥

नमाम्यभोगिपरिवारसंपदं निरस्तभूतिमनुमार्धविग्रहम् ।
अनुग्रमुन्मृदितकाललाञ्छनं विनाविनायकमपूर्वशङ्करम् ॥
(पद्मपादाचार्याणाम्)

आशैलादुदयात् तथास्तगिरितो भास्वद्यशोरश्मिभिः
व्याप्तं विश्वमनन्धकारमभवद्यस्य स्म शिष्यैरिदम् ।
आरात् ज्ञानगभस्तिभिः प्रतिहतश्चन्द्रायते भास्करः
तस्मै शङ्करभानवे तनुमनोवाग्भिर्नमः स्यात् सदा ॥
(सुरेश्वराचार्याणाम्)

येषां धीसूर्यदीप्त्या प्रतिहतिमगमन्नाशमेकान्ततो मे
ध्वान्तं स्वान्तस्य हेतुर्जननमरणसन्तानदोलाधिरूढेः ।
येषां पादौ प्रपन्नाः श्रुतिशमविनयैः भूषिताः शिष्यसंघाः
सद्यो मुक्ताः स्थितास्तान् यतिवरमहितान्
यावदायुर्नमामि ॥ (तोटकाचार्याणाम्)

उद्धृत्य वेदपयसः कमलामिवाब्धेः
आलिङ्गिताखिलजगत्प्रभवैकमूर्तिम् ।

विद्यामशेषजगतां सुखदामदाद्यः
तं शङ्करं विमलभाष्यकृतं नमामि ॥
( विवरणाचार्याणाम् )

यद्भाष्याम्बुजजातजातमधुरश्रेयोमधुप्रार्थना-
सार्थव्यग्रधियः समग्रनरुतः स्वर्गेऽपि निर्वेदिनः ।
यस्मिन्मुक्तिपथः पथीनमुनिभिः संप्रार्थितः संबभौ
तस्मै भाष्यकृते नमोऽस्तु भगवत्पादाभिधां बिभ्रते ॥
(श्रीमदानन्दगिर्याचार्याणां सूत्रभाष्यव्याख्यायां)

वक्तारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विता‌सीत् ।
निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शङ्करमर्चिताङ्घ्रिम् ॥
( सर्वज्ञात्ममुनीनाम् )

भगवत्पादपादाब्जपांसवः सन्तु सन्ततम् ।
अपारासारसंसारसागरोत्तारसेतवः ॥
( चित्सुखाचार्याणाम् )

वेदान्ताम्भोगभीरा नयमकरकुला ब्रह्मविद्याब्जषण्डा
पाषण्डोत्तुङ्गवृक्षप्रमथननिपुणा मानवीचीतरङ्गा ।
यस्यास्योत्था सरस्वत्यखिलभवभयध्वंसिनी शंकरस्य
गङ्गा शंभोः कपर्दादिव निखिलगुरोर्नौमि तत्पादपद्मम् ॥
( ज्ञानघनपादानां - तत्त्वशुद्धौ )

मीमांसया कपटतो भुजगाम्बयेव
स्वाधीनतामुपनिषद्विनतेव नीता ।
येनोद्धृताऽमृतफलेन गरुत्मतेव
तस्मै नमो भगवतेऽद्भुतशङ्कराय ॥
( मधुसूदनसरस्वतीनां वेदान्तकल्पलतिकायाम् )

नमस्तस्मै भगवते शंकराचार्यरूपिणे ।
येन वेदान्तविद्येयमुद्धृता वेदसागरात् ॥
( विद्यारण्यमुनिविरचितायां
अपरोक्षानुभूतिदीपिकायाम् )

मिथ्याज्ञानविजृम्भमाणजगतामभ्यन्तरे भुञ्जतः
स्वारब्धानि निरीक्ष्य जीवनिचयान्मूढानविद्यावशान् ।
देवः कारुणिकोऽवतीर्य समशासद्यस्तु शारीरके
भाष्यं तं प्रणमामि शङ्करगुरुं निःश्रेयसावाप्तये ॥
( रघुनाथसूरिविरचिते शांकरपादभूषणे )

जनैश्चतुर्भिः कलितोऽपि पञ्चमो
दिदेश कोटिं कृतिभिर्न पञ्चमीम् ।
स्वमद्वयां सौगतबोधचुम्बिनीं
स शङ्कराचार्यवरः पुनातु नः ॥
( शंकरचैतन्यभारतीस्वामिनां )

स्तुवन्मोहतमस्तोमभानुभावमुपेयुषः ।
स्तुमस्तान् भगवत्पादान् भवरोगभिषग्वरान् ॥
( श्रीसदाशिवेन्द्रसरस्वतीरचितायां ब्रह्मसूत्रवृत्त )

नमामि शङ्कराचार्यगुरुपादसरोरुहम् ।
यस्य प्रसादान्मूढोऽपि सर्वज्ञोऽहं सदास्म्यहम् ॥
( आनन्दगिरिशङ्करविजये )

यो लोकोपकृतौ प्रविष्टहृदयो जित्वातिवाद्यं भतं
श्रीमच्छङ्करशब्दपूर्वभगवत्पादाभिधानं गतम् ।
सद्वेदान्तरहस्यवत्स्फुटितवान् गोप्यं रहो मानवं
तं वन्दे भगवन्तमन्तकरिपुं सर्वान्तरायच्छिदम् ॥
( श्रीकामेश्वरसूरिकृतायां अरुणामोदिनीनाम्न्यां
सौन्दर्यलहरीव्याख्यायाम् )

तं वन्दे शङ्कराचार्यं लोकत्रितयशङ्करम् ।
सतर्कनखरोद्गीर्णवावदूकमतङ्गजम् ॥
( तत्त्वबोधभगवत्प्रणीते तत्त्वबोधे )

महामोहपङ्के विरिञ्चाचरान्तं
प्रजाहस्तिनं मग्नमालोक्य भाष्यैः ।

जलैः क्षालयित्वाऽऽत्मविद्यादिवं यो
नयत्येकलं शङ्करं तं नमामि ॥
( ज्ञानामृतयतेः कृतौ विद्यासुरभिसंज्ञके
नैष्कर्म्यसिद्धिविवरणे )

आनन्दघनमद्वन्द्वं निर्विकारं निरञ्जनम् ।
भजेऽहं भगवत्पादं भजतामभयप्रदम् ॥
( मनीषापञ्चकव्याख्याने )

सूत्रप्रग्रहवेदवाजिनि महन्मीमांसकस्यन्दने
तिष्ठन् भाष्यपिनाकमुज्ज्वलगुणं कृत्वात्मधीसायकम् ।
आकृष्य प्रदहन्नशेषविपदां मूलं पुराणां त्रयं
भूयान्नोऽभिनवः पुरारिरशुभस्योच्छित्तये शङ्करः ॥
( रामानन्दस्य ऋजुविवरणव्याख्यायाम् )

यद्भाष्यसागरजयुक्तिमणीन् प्रकीर्णान्
प्राप्याधुना कतिपयान् कवयो भवन्ति ।
तस्मै नमो जनमनोब्जदिवाकराय
कृत्स्नागमार्थनिलयाय यतीश्वराय ॥
( श्री बोधनिधिकृते उपदेशप्रकरणविवरणे )

याऽनुभूतिः स्वयं ज्योतिरादित्येशानविग्रहा ।

शंकराख्या च तं नौमि सुरेश्वरपदास्पदम् ॥

श्री नृसिंहप्रज्ञमुनिकृते बृहदारण्यकभाष्य
वार्तिकन्यायतत्त्वविवरणे )

मेधायाथात्म्यसिद्ध्यै भवतु भगवती दग्धजीवच्छरीर-
म्लेच्छालापाहिमूर्च्छानिमिषदुपनिषज्जीवातुरुक्तिः ।
अद्वैतब्रह्मराद्धान्तिकसकलपुराणेतिहासोपवल्गां
आप्ता साम्राज्यपीठीमनघजनमनश्शङ्करी शाङ्करी नः ॥

( श्री वेङ्कटनाथस्य )

विचार्य सर्ववेदान्तैः संचार्य हृदयाम्बुजे ।
प्रचार्य सर्वलोकेषु आचार्य शंकरं भजे ॥

( नारायणीयोपनिषद्भाष्ये )

संसाराध्वनि तापभानुकिरणप्रोद्भूतदाहव्यथा-
खिन्नानां जलकांक्षया मरुभुवि श्रान्त्या परिभ्राम्यताम् ।
अत्यासन्नसुखांबुधिं सुखकरं ब्रह्माद्वयं दर्शय-
न्त्येषा शंकरभारती विजयते निर्वाणसंदायिनी ॥

( विवेकचूडामणौ )

हरलीलावताराय शङ्कराय वरौजसे ।
कैवल्यकलनाकल्पतरवे गुरवे नमः ॥

( श्री उमामहेश्वररचितायां तत्त्वचन्द्रिकायाम् )

यमाश्रिता गिरां देवी नन्दयत्यात्मसंश्रितान् ।
तमाश्रये श्रिया जुष्टं शङ्करं करुणानिधिम् ॥

( श्री बोधेन्द्रयतीनामद्वैतभूषणे )

वेदान्तोदरवर्ति भास्वदमलं ध्वान्तच्छिदस्मद्धियो
दिव्यं ज्ञानमतीन्द्रियेपि विषये व्याहन्यते न क्वचित् ।
यो नो न्यायशलाकयैव निखिलं संसारबीजं तमः
प्रोत्सार्याविरकार्षीद्गुरुगुरुः पूज्याय तस्मै नमः ॥

( श्रीमत्सुरेश्वराचार्यरचितायां नैष्कर्म्यसिद्धौ )

अखिलपरमहंसदेशिकमागमगूढार्थदर्शकं प्राज्ञम् ।
स्वानन्दपूर्णसागरमनिशमहं नौमि शङ्कराचार्यम् ॥

( श्री नागनाथरचिते आत्मबोधप्रकरणे )

दृष्ट्वा यो दिव्यदृष्टिः कलियुगसमये मन्दभाग्या मनुष्याः
तस्मात्तन्त्रप्रपञ्चः सुरयजनविधिर्मत्कृतो निष्फलः स्यात् ।
इत्याविर्भूय पृथ्व्यां पुनरपि कृतवांस्तन्त्रसारं गिरीशः
तं वन्दे शङ्कराख्यं महिततममनःप्रार्थनीयार्थरूपम् ॥

( प्रपञ्चसारसंबन्धदीपिकायाम् )

यदीयवाक्सूर्यरुचिप्रणाशितो हृदन्धकारो नमतामशेषतः ।

महात्मनश्शिष्यहिते सदा रतान् नमामि तान्

शङ्करपूज्यदेशिकान् ॥

( श्रीशङ्कुकविरचिते कैवल्यनवनीते )

वेदान्तार्थं गभीरं ह्यतिसुगमतया बोधयामीति विष्णुः

व्यासात्माऽसूत्रयत्तद्दुरधिगममभूद्वादिदुर्बुद्धिभेदात् ।

भिन्दन् दुर्बुद्धिभेदं य इह करुणयाऽभाष्ययद्भाष्यमेतत्

तं वन्दे सर्ववन्द्यं त्रिजगति भगवत्पादसंज्ञं महेशम् ॥

( रामानन्दसरस्वतीकृतविवरणोपन्यासे )

नमः श्रीशङ्कराचार्यगुरवे शङ्करात्मने ।

शरीरिणां शङ्कराय शङ्करज्ञानहेतवे ॥

( श्रीमन्नृसिंहाश्रमविरचितायां तत्वबोधिन्याख्यायां

संक्षेपशारीरकटीकायाम् )

येनाद्वन्द्वमखण्डमक्षयपदं प्रादर्शि तापापहं

भाष्यग्रन्थिनिबन्धनैः श्रुतिशिरोवाक्यार्थविद्योतिभिः ।

नित्यो यत्र समस्तसद्गुणगणस्तं शङ्कराचार्यगी-

र्विख्यातं मुनिमौलिलालितपदद्वन्द्वं सदा संश्रये ॥

( श्रीरामतीर्थस्वामिरचितायां अन्वयार्थप्रकाशिकाख्यायां

संक्षेपशारीरकव्याख्यायाम् )

त्रिरोगगणाक्रान्ते जननमरणादित्रिगभुवा
जनेऽस्मिन् सर्वस्मिन्नतिमिरपरिमाहैकशरणे ।
निरोद्धुं निष्यातोऽमृतमगपतिः शङ्कर इति
स्वनाम व्याख्यातुं जयति कुहनाभिक्षुरनिशम् ॥

( अभिनवद्राविडाचार्य श्रीबालकृष्णानन्दसरस्वतीनां
शारीरकमीमांसाभाष्यवार्तिके )

यद्भाष्योक्तिलेशपरिजुषश्छात्रवर्गा महान्तो
निर्भिन्दन्ति प्रबलमतयो वादिशैलं समस्तम् ।
येर्वेदाब्धेरमृतमिव सद्भाष्यमात्मप्रकाशं
तत्पादाब्जं स्फुरतु हृदये सुदृढं सर्वदा मे ॥

( मनीषापञ्चरत्नलघुविवरणे )

संसारसर्पपरिदष्टविनष्टजन्तु-
सञ्जीवनाय परया कृपयोपपन्नः ।
ब्रह्मावबोधपरमौषधमुद्वहन् यः
तं शङ्करं परतरं भिषजां भजामि ॥

( अद्वैतबोधामृतम् )

श्रीसंबन्धमुदीक्ष्य वाचकपदे यान् शार्ङ्गिणं वैष्णवाः
चन्द्रोत्तंसपदास्पदत्वकलनाच्छम्भुं च शैवा विदुः ।

आनन्दाद्वयशोभमानपरमप्रेमास्पदं योगिनः
तान् पादाम्बुजरेणुधूततमसो वन्दे सदा श्रीगुरून् ॥

( श्रीगङ्गाधरसरस्वत्याख्यभिक्षुणा रचितायां
आत्मसाम्राज्य सिद्धिव्याख्यायाम् )

अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा
सरिदिव महीभागान् संप्राप्य शौरिपदोद्गता ।
जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता
जननहरणी सूक्तिर्ब्रह्माद्वयैकपरायणा ॥

( श्रीमदप्पय्यदीक्षितानां सिद्धान्तलेशसंग्रहे )

विष्णवे व्यासरूपाय ब्रह्मसूत्रकृते नमः ।
महेशाय च तद्भाष्यकृते शंकररूपिणे ॥

( श्रीमदल्लालसूरिरचिते भारतीतिलके )

यत्पादाब्जप्रभवविमलश्रीपरागालिभास्वान्
मत्स्वान्तस्थं प्रणुदति तमःपुञ्जमत्यन्तचण्डम् ।
यत्कारुण्यप्लवपरिजुषा तारितोऽनेन तूर्णं
संसाराब्धिः प्रणतिरनिशं स्याद्गुरूणां पदाब्जे ॥

( सीतारामसूरिरचिते वेदान्तकौस्तुभे )

वेदान्तव्रातनीरं शतपथकथितन्यायरत्नप्रपूरं
पारावारं सुतारं निगममुखषडङ्गातमसद्ग्राहघोरम् ।

कारंकारं सुगाहं श्रुतमतमथितंब्रह्मविद्यामृतं यः
प्रादादादाय तस्मादशरणशरणं शङ्करं तं नमामः ॥
( श्रीमदानन्दपूर्णरचितायां न्यायकल्पकलिकानाम्न्य
सुरेश्वरवार्तिकटीकायाम् )

वेदान्तार्थविभासकाय गुरवे शान्ताय सन्न्यासिने
नानावादिनगेन्द्रसङ्घपवये योगीन्द्रवन्द्याय च ।
मोहध्वान्तदिवाकराय भगवत्पादाभिधां बिभ्रते
तस्मै भाष्यकृते नमोऽस्तु सततं पूर्णाय बोधात्मने ॥
( तैत्तिरीयभाष्यटीकायां )

काले शिवः क्रमवशात् कलिदोषदुष्ट
यस्संप्रदायरहितं तदपेक्ष्य भूयः ।
क्षोण्यामवातरदशेषजगद्धितार्थी
श्रीशङ्कराख्यममलं गुरुमाश्रये तम् ॥
( श्रीनारायणकृतौ प्रपञ्चसारार्थदीपे )

वेदाद्यागमदुग्धसिन्धुमथनात्तन्मेयमन्थाद्रिणा
दिव्याभोगविचारवासुकिवशादाश्रित्य धैर्यं परम् ।
ब्रह्मोद्बोधसुधां विधाय दयया मर्त्यानमर्त्यानमी
कुर्वन्तो गुरवो जयन्ति जगतां लक्ष्मीशचक्रक्षकाः ॥
( श्री वरदराजपण्डितकृतौ खण्डनमण्डने )

यद्वक्त्राम्बुजनिस्सृतं परमकं श्रीसूत्रभाष्यामृतं
पीत्वा मादृशजीवभङ्गनिचया नन्दन्ति मोक्षाङ्गणे ।
नानावादिमदेभभञ्जनमहाव्यग्रोग्रकण्ठीरवान्
वन्दे व्यासमुनीन्द्रशङ्करमुखान् सद्देशिकांस्तानहम् ॥
( श्रीमदमरेश्वरशास्त्रिरचिते अज्ञानध्वान्तचण्डभास्करे )

ये वेदान्तसुधोदधिं सुमनसां निःश्रेयसाय स्वयं
निर्मथ्योदहरन्निरूपणगुणावृत्तेन चेतोमथा ।
अद्वैतामृतमासुराप्तुशयिनामास्वादनीयेतरत्
तानास्माकगुरोरुपास्मि भगवत्पादादिमान् देशिकान् ॥
( श्री कृष्णानन्दयतिकृतौ सिद्धान्तसिद्धाञ्जने )

संसाराब्धिनिषण्णाज्ञनिकरप्रोज्जिहीर्षया ।
कृतसंहननं वन्दे शङ्करं लोकशङ्करम् ॥
( श्रीविज्ञानवासयतिरचितायां पञ्चपादिकाव्याख्यायां )

श्रीगुरुं भगवत्पादं शरण्यं भक्तवत्सलम् ।
शिवं शिवकरं शुद्धमप्रमेयं नमाम्यहम् ॥
( गुर्वष्टके )

योऽयं दैवतसार्वभौमविभवो विश्वाधिको रुद्र इ-
त्याद्यैर्हृद्यवचोभिरद्वयपरस्यापि संस्तूयते ।

अद्वैतात्मविबोधनाय विदुषामिच्छासमङ्गीकृत-
श्रीमच्छङ्करदेशिकेन्द्रवपुषं श्रीशङ्करं भावये ॥
( श्रीशंकराचार्याष्टके )

यत्पादपङ्कजध्यानाल्लक्ष्मणाद्या यतीश्वराः ।
बभूवुस्तादृशं वन्दे शङ्करं षण्मतेश्वरम् ॥
( उत्तरगीताटीकायाम् )

क्वेमे शङ्करसद्गुरोर्गुणगणाः दिग्जालकूलङ्कषाः
कालोन्मीलितमालतीपरिमलावष्टम्भमुष्टिन्धयाः ।
क्वाहं हन्त तथापि सद्गुरुकृपापीयूषपारम्परी-
मग्नोन्मग्नकटाक्षवीक्षणदलादस्मि प्रशस्तोऽर्हताम् ॥
( संक्षेपशङ्करविजये )

श्रीमच्छङ्करसद्गुरोर्भगवतोऽगाधामसाधारणीं
वाणीं नः प्रतनीयसीं मुहुरिमां गाढं समुत्कण्ठते ।
तन्मूर्तिः प्रभुरेव भक्तजनतावात्सल्यवैपुल्यभूः
अस्मै साधु ददातु शस्तदयया हस्तावलम्बं हरः ॥
( श्रीवल्लीसहायकविकृतौ आचार्यदिग्विजये )

देशे कालटिनाम्नि केरलधराशोभाकरे सद्द्विजे
जातः श्रीपतिमन्दिरस्य सविधे सर्वज्ञतां प्राप्तवान् ।

भूत्वा षोडशवत्सरे यतिवरो गत्वा बदर्याश्रमं
कर्ता भाष्यनिबन्धनस्य सुकविः श्रीशङ्करः पावनः ॥
( श्रीगोविन्दानन्दरचिते शङ्कराचार्यचरिते )

वेदान्तार्थाभिधानेन सर्वानुग्रहकारिणम् ।
यतिरूपधरं वन्दे शङ्करं लोकशङ्करम् ॥
( हरिहराद्वैतभूषणे )

पाराशर्यवचोविलासमसृणैः सूत्रैः क्रमेणाततैः
रत्यस्त्यः प्रकटीचकार भगवान् यो भाष्यसंज्ञं पटम् ।
अज्ञानोद्भवजाड्यनाशकरणं स्वानन्ददं सेविनां
तं वन्देऽखिलयोगिवन्द्यचरणं श्रीशंकरं शंकरम् ॥
( श्रीकमलाकरदेवकृतौ आनन्दविलासे )

प्रचण्डपाखण्डविखण्डनोद्यतं त्रयीशिरोर्थप्रतिपादने रतम् ।
बुधैर्नुतं योगकलाभिरावृतं नमामि तं शंकरदेशिकं ततम् ॥
( श्रीसच्चिदानन्दसरस्वतीकृतौ आर्याव्याख्यायाम् )

सर्वतन्त्रस्वतन्त्राय सदात्माद्वैतरूपिणे ।
श्रीमते शंकरार्याय वेदान्तगुरवे नमः ॥

यद्वैदिका बोधयितुं सहस्रं शब्दाः प्रवृत्ता इति नेति नेति ।
तच्छङ्करानन्दसरस्वतीति ख्यातं परं दैवतमाश्रयामः ॥
( श्रीमुकुन्दकृतौ शंकरमन्दारसौरभसमीरे )

श्रीगौरीनाथतत्त्वं सकलमुनिकृतं वेदवेदान्तवेद्यं
साक्षात्कैवल्यरूपं विधिहरिनमितं भोगमोक्षप्रदं च ।
सत्यज्ञानादिरूपं प्रकटितमकरोत् ब्रह्मनिर्वाणमेकं
वन्देऽहं सेवकानामखिलसुखकरं शंकराचार्यमूर्तिम् ॥

( श्रीवामनकृतौ अपरोक्षानुभूतिसमश्लोक्याम् )

विदिताखिलशास्त्रसुधाजलधे महितोपनिषत्कथितार्थनिधे ।
हृदये कलये विमलं चरणम् भव शंकर देशिक मे शरणम् ॥

( तोटकाष्टकतः )

महिमाननीयचरितं दधतं महिमानमीड्यमहिमाल्यभृतः ।
अवतारभूतमवतान्नुवतां भवतारणं किमपि वस्तु मुहुः ॥

शङ्कराचार्यवर्यो मे सन्निधत्तां सदा हृदि ।
सौम्यं यस्य वपुः ख्यातं विजहद्विषमां दशम् ॥

( नरकण्ठीरवकवेः यतिसार्वभौमोपहारतः )

शिवगुरुतपःप्रबन्धं चिद्घनमार्योदरावासम् ।
शंकरगुरुवरमाद्यं ध्यायाम्यनिशं परात्मानम् ॥

( श्रीकृष्णशास्त्रिणः ब्रह्मसूत्रानुगुण्यसिद्धेः )

गामाक्रम्य पदेऽधिकाश्चि निबिडं स्कन्धैश्चतुर्भिस्तथा
व्यावृण्वन् भुवनान्तरं परिहरंस्तापं समोहज्वरम् ।

य: शाखी द्विजसंस्तुतः फलति तत्स्वाद्यं रसाढ्यं फलं
तस्मै शंकरपादपाय महते तन्मस्त्रिसन्ध्यं नमः ॥

( व्यासाचलीयशंकरविजयतः )

अद्वैतार्णवपूर्णचन्द्रमभिदापद्माटवीभास्करं
त्रिद्वत्कोटिसमर्चितांघ्रियुगलं प्रद्वेषकक्षानलम् ।
हृद्याभेद्यसमस्तवेदजनितप्रोद्यद्विवेकांकुरं
स्त्रिग्धद्वागमृतं परात्परगुरुं श्रीशंकरं तं भजे ॥

( अनन्तानन्दगिरीयशंकरविजयतः )

गुरुर्नाम्ना महिम्ना च शंकरो यो विराजते ।
तदीयांघ्रिगलद्रेणुकणायास्तु नमो मम ॥

( श्रीचन्द्रशेखरेन्द्र सरस्वती श्रीचरणानाम् )



## ॥ वन्दे शंकरम् ॥

शंकराश्लेषविलसदानन्दामृतनिर्भराम् ।
विश्वोत्तंसितपादाब्जां ब्रह्मविद्यां विभावये ॥
(अद्वैतानन्दसरस्वतीकृत ब्रह्मविद्याभरणतः)

वेदान्तार्थाभिधानेन सर्वानुग्रहकारिणम् ।
यतिरूपधरं वन्दे शंकरं लोकशंकरम् ॥
हरिहराद्वैतभूषणतः

आश्रिताज्ञानतत्कार्यनाशकं देशिकोत्तमम् ।
चिन्मुद्रालंकृतकरं यतिराजं नमाम्यहम् ॥
(गुर्वष्टकतः)

षट्पदीनौकया सर्वानुद्दधार नतोऽस्म्यहम् ।
संसारसागरे मग्नान् यस्तं शंकरदेशिकम् ॥

श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादशंकरं लोकशंकरम् ॥

शास्त्रं शारीरमीमांसा देवस्तु परमेश्वरः ।
आचार्याः शंकराचार्याः सन्तु जन्मनि जन्मनि ॥

महात्रिपुरसुन्दरीरमण चन्द्रमौलीश्वर-
प्रसादपरिलब्धवाङ्मयविभूषिताशान्तरम् ।
निरन्तरमुपास्महे निरुपमात्मविद्यानदी-
नदीनदपतिप्रभं मनसि शंकराद्यं गुरुम् ॥

*Books Published By*

# SIMILI VENKATARAMA SASTRI TRUST

TIRUCHIRAPALLI-620 002.

1. **SRI SANKARA VIJAYA MAKARANDA**:

(*In Sanskrit*) by *Vaidya S. V. Radhakrishna Sastri*, 388 Pages, 2787 Slokas in **32** chapters. A detailed life history of *Sri Sankara Bhagavatpada* compiled from all the available Sankaravijayas and other sources, with exhaustive notes on anecdotal references and alternate version to the main theme adopted in the Text. 1234 slokas from 118 works of Sri Sankara Bhagavatpada himself are suitably interspaced at appropriate places.

Rs. 15–00

2. **SRI SANKARODANTA** :

(Laghukavya in Sanskrit) a short life sketch of Sri Sankara Bhagavatpada. Rs. 0–75

3. **ACHARYA PRASASTI MAKARANDA** :

(In Sanskrit) a compilation of *Pranama slokas* on Sankara Bhagavatpada by eminent commentators of Sri Sankara's works like Padmapada, Sureshwara, Vidyaranya, Appayya Dikshita etc. Rs. 0–50

4. **SRI SAMKARACHARYA** :

(in English) by *Vaidya Visharada K. G. Natesa Sastri* a reprint from *Jijnasa*, of the detailed article of Sri Natesa Sastri on date of Sri Sankara Bhagavatpada as revealed in his Bhashya, and other external evidences like lists of successors of Sri Sankara preserved by Sankara Mutts.

Rs. 2–00

*Copies can be had from*:

Vaidya S. V. RADHAKRISHNA SASTRI,
25, Tanjore Tank Street,
TIRUCHIRAPALLI–620 002.

*Sri Kamakshi Printers, Trichy-8.*